# चम्पूरामायणे

# बालकाण्डम्

३८ – १५.१०.२०१८

vyoma

॥ वाचं धेनुमुपासीत ॥

Saṃskṛtam · Value Education · Technology



vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education - Technology

# मङ्गलम्

- लक्ष्मीं तनोतु नितरामितरानपेक्षम्
- अङ्घ्रिद्वयं निगम-शाखि-शिखा-प्रवालम् ।
- हैरम्बमम्बुरुह-डम्बर-चौर्य-निघ्नम्
- विघ्नाद्रि-भेद-शतधार-धुरन्धरं नः ॥

# पुनरावर्तनम्

- शुनःशेपवृत्तान्तम्
- मेनकया सहवासः
- रम्भायाः शापः
- पूर्वस्यां दिशि अत्युग्रं तपः – ब्रह्मर्षिपदप्राप्तिः

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# असौ वसिष्ठनिर्देशाद्ब्रह्मर्षित्वमविन्दत।
# यथोपनयसंस्काराद्द्विजन्मा ब्रह्मवर्चसम्॥९८॥

- असौ, वसिष्ठ-निर्देशात्, ब्रह्म-ऋषित्वम्, अविन्दत, यथा, उपनय-संस्कारात्, द्वि-जन्मा, ब्रह्म-वर्चसम्
- अविन्दत = प्राप्तवान्
- कः अविन्दत? असौ = विश्वामित्रः
- किम् अविन्दत? ब्रह्मर्षित्वम् = ब्रह्मर्षिभावम्
- कस्मात् अविन्दत? वसिष्ठनिर्देशात् = वसिष्ठस्य निरूपणात्

# असौ वसिष्ठनिर्देशाद्ब्रह्मर्षित्वमविन्दत।
# यथोपनयसंस्काराद्द्विजन्मा ब्रह्मवर्चसम्॥९८॥

- यथा = ये प्रकारेण
- [विन्दति] = प्राप्नोति
- कः विन्दति? द्विजन्मा = ब्राह्मणः
- किं विन्दति? ब्रह्मवर्चसम् = ब्रह्मतेजः
- कस्मात् विन्दति? उपनयनसंस्कारात् = आचार्यविहितात् उपनयनात्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam-Value Education-Technology

# असौ वसिष्ठनिर्देशाद्ब्रह्मर्षित्वमविन्दत।
# यथोपनयसंस्काराद्द्विजन्मा ब्रह्मवर्चसम्॥९८॥

- अन्वयः – यथा उपनयनसंस्कारात् द्विजन्मा ब्रह्मवर्चसं विन्दति, [एवं] असौ वसिष्ठनिर्देशात् ब्रह्मर्षित्वम् अविन्दत ।
- तात्पर्य्यम् – यथा कश्चित् ब्राह्मणकुले जातः आचार्यविहितात् उपनयनसंस्कारात् अनन्तरमेव ब्रह्मतेजः प्राप्नोति, एवं सः विश्वामित्रः ब्रह्मादिभिः अनुगृहीतोऽपि वसिष्ठस्य अनुमोदनादेव ब्रह्मर्षिभावं प्राप्तवान्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education

# असौ वसिष्ठनिर्देशाद्ब्रह्मर्षित्वमविन्दत।
# यथोपनयसंस्काराद्द्विजन्मा ब्रह्मवर्चसम्॥९८॥

- अविन्दत – “विद्लृ लाभे” – लङ्, प्रथम.१ । [विद ज्ञाने – वेत्ति, विद सत्तायाम् – विद्यते, विद्लृ लाभे – विन्दति/विन्दते, विद विचारणे – विन्त्ते]
- द्विजन्मा – द्वे जन्मनी यस्य सः । नकारान्तः, पुं, १.१ । “दन्त-विप्र-अण्डजाः द्विजाः” (अमरः)
- ब्रह्मवर्चसम् – ब्रह्मणः वर्चः । अकारान्तः, पुं, २.१ ।
- उपमालङ्कारः, अनुष्टुप् छन्दः ।

vyoma ॥ वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

इति जनकपुरोधःश्लाघितो गाधिसूनुः
सह नृपतनयाभ्यां शर्वरीं तत्र नीत्वा।
विधिवददिशदर्घ्यं पुष्पदर्भाग्रगर्भं
सरसिजदयिताय ज्योतिषे छान्दसाय॥९९॥

- इति, जनक-पुरोधस्-श्लाघितः, गाधि-सूनुः, सह, नृप-तनयाभ्याम्, शर्वरीम्, तत्र, नीत्वा, विधिवत्, अदिशत्, अर्घ्यम्, पुष्प-दर्भ-अग्र-गर्भम्, सरसिज-दयिताय, ज्योतिषे, छान्दसाय

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

इति जनकपुरोधःश्लाघितो गाधिसूनुः सह नृपतनयाभ्यां शर्वरीं तत्र नीत्वा।
विधिवददिशदर्घ्यं पुष्पदर्भाग्रगर्भं सरसिजदयिताय ज्योतिषे छान्दसाय॥९९॥

- अदिशत् = दत्तवान्
- कः अदिशत्? गाधिसूनुः = विश्वामित्रः
- कथम्भूतः गाधिसूनुः? जनकपुरोधःश्लाघितः = जनकपुरोहितेन शतानन्देन प्रशंसितः
- कथं श्लाघितः? इति = पूर्वोक्तप्रकारेण
- किम् अदिशत्? अर्घ्यम् = जलाञ्जलिम्

इति जनकपुरोधःश्लाघितो गाधिसूनुः सह नृपतनयाभ्यां शर्वरीं तत्र नीत्वा।
विधिवददिशदर्घ्यं पुष्पदर्भाग्रगर्भं सरसिजदयिताय ज्योतिषे छान्दसाय॥९९॥

- कीदृशम् अर्घ्यम्? पुष्पदर्भाग्रगर्भम् = कुसुम-कुशाङ्कुरमिश्रम्
- कस्मै अदिशत्? ज्योतिषे = तेजसे, सूर्याय
- कीदृशाय ज्योतिषे? छान्दसाय = वेदस्वरूपाय, त्रयीमयाय
- “ऋग्भिः पूर्वाह्णे दिवि देव ईयते, यजुर्वेदे तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये महीयते”
- पुनः कीदृशाय ज्योतिषे? सरसिजदयिताय = कमलबान्धवाय
- कथम् अदिशत्? विधिवत् = यथाशास्त्रम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

इति जनकपुरोधःश्लाघितो गाधिसूनुः सह नृपतनयाभ्यां शर्वरीं तत्र नीत्वा।
विधिवददिशदर्घ्यं पुष्पदर्भाग्रगर्भं सरसिजदयिताय ज्योतिषे छान्दसाय॥९९॥

- किं कृत्वा अदिशत्? नीत्वा = यापयित्वा
- कां नीत्वा? शर्वरीम् = रात्रिम्
- कुत्र नीत्वा? तत्र = जनकयजनभवने
- काभ्यां सह नीत्वा? नृपतनयाभ्यां सह = रामलक्ष्मणाभ्यां साकम्

vyoma
॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# इति जनकपुरोधःश्लाघितो गाधिसूनुः सह नृपतनयाभ्यां शर्वरीं तत्र नीत्वा।
# विधिवददिशदर्घ्यं पुष्पदर्भाग्रगर्भं सरसिजदयिताय ज्योतिषे छान्दसाय॥९९॥

- अन्वयः – इति जनकपुरोधःश्लाघितः गाधिसूनुः नृपतनयाभ्यां सह तत्र शर्वरीं नीत्वा सरसिजदयिताय छान्दसाय ज्योतिषे पुष्पदर्भाग्रगर्भम् अर्घ्यं विधिवत् अदिशत् ।
- तात्पर्य्यम् – एवं शतानन्देन चरितकथनपूर्वकं प्रशंसितः विश्वामित्रः जनकस्य यागभवने रात्रिं यापयित्वा प्रातः कमलबान्धवाय वेदस्वरूपिणे सूर्याय कुसुम-कुशाङ्कुरमिश्रं जलाञ्जलिं यथाशास्त्रं प्रादात् ।

इति जनकपुरोधःश्लाघितो गाधिसूनुः सह नृपतनयाभ्यां शर्वरीं तत्र नीत्वा।
विधिवददिशदर्घ्यं पुष्पदर्भाग्रगर्भं सरसिजदयिताय ज्योतिषे छान्दसाय॥९९॥

- जनकपुरोधःश्लाघितः – जनकस्य पुरोधाः, जनकपुरोधसा श्लाघितः
- शर्वरीम् – "शर्वरी । निशा निशीथिनी रात्रिः" (अमरः)
- सरसिजदयिताय – सरसिजस्य दयितः, तस्मै ।
- ज्योतिषे – सकारान्तः, पुं, ४.१
- छान्दसाय – छन्दः एव छान्दसम् । स्वार्थे अण् ।
- मालिनीवृत्तम् – "ननमयययुतेयं मालिनी भोगिलोकैः" – ८+७ = १५

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

तदनु जनकराजधानीं रामलक्ष्मणनिरीक्षणकौतुकादनवरतपतितेन विकचकुवलयनिचयोपचीयमानमेचकमरीचिमलिम्लुचेन पौरनारीलोचनरोचिषा कवचितनरपतिपथां विश्वामित्रः प्रविश्य दशरथतनयाविदमभाषत।

- तत्-अनु, जनक-राज-धानीम्, राम-लक्ष्मण-निरीक्षण-कौतुकात्, अनवरत-पतितेन, विकच-कुवलय-निचय-उपचीयमान-मेचक-मरीचि-मलिम्लुचेन, पौर-नारी-लोचन-रोचिषा, कवचित-नर-पति-पथां, विश्वामित्रः, प्रविश्य, दशरथ-तनयौ, इदम्, अभाषत

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

तदनु जनकराजधानीं रामलक्ष्मणनिरीक्षणकौतुकादनवरतपतितेन विकचकुवलयनिचयोपचीयमानमेचकमरीचिमलिम्लुचेन पौरनारीलोचनरोचिषा कवचितनरपतिपथां विश्वामित्रः प्रविश्य दशरथतनयाविदमभाषत।

- तदनु = ततः परम्
- विश्वामित्रः = कौशिकः
- जनकराजधानीम् = मिथिलाम्
- प्रविश्य = विष्ट्वा

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam · Value Education · Technology

तदनु जनकराजधानीं रामलक्ष्मणनिरीक्षणकौतुकादनवरतपतितेन विकचकुवलयनिचयोपचीयमानमेचकमरीचिमलिम्लुचेन पौरनारीलोचनरोचिषा कवचितनरपतिपथां विश्वामित्रः प्रविश्य दशरथतनयाविदमभाषत।

- रामलक्ष्मणनिरीक्षणकौतुकात् = रामलक्ष्मणयोः अवलोकनस्य औत्सुक्येन
- अनवरतपतितेन = निरन्तरं प्रसृतेन
- पौरनारीलोचनरोचिषा = नगरस्त्रीणां नयनकान्त्या

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

तदनु जनकराजधानीं रामलक्ष्मणनिरीक्षणकौतुकादनवरतपतितेन विकचकुवलयनिचयोपचीयमानमेचकमरीचिमलिम्लुचेन पौरनारीलोचनरोचिषा कवचितनरपतिपथां विश्वामित्रः प्रविश्य दशरथतनयाविदमभाषत।

- विकचकुवलयनिचयोपचीयमानमेचकमरीचिमलिम्लुचेन – विकचानि = प्रफुल्लानि यानि कुवलयानि = नीलोत्पलानि, तेषां निचयेन = समूहेन, उपचीयमाना = प्रवर्धमाना, या मेचकमरीचिः = श्यामलकान्तिः, तस्याः मलिम्लुचेन = चोरेण । पौरनारीणां नयनकान्तिः विकसितानां नीलोत्पलानां समूहस्य या श्यामलकान्तिः, तत्सदृशी इत्यर्थः ।
- कवचितनरपतिपथाम् = आच्छादित-राजमार्गाम्

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

तदनु जनकराजधानीं रामलक्ष्मणनिरीक्षणकौतुकादनवरतपतितेन विकचकुवलयनिचयोपचीयमानमेचकमरीचिमलिम्लुचेन पौरनारीलोचनरोचिषा कवचितनरपतिपथां विश्वामित्रः प्रविश्य दशरथतनयाविदमभाषत।

- दशरथतनयौ = रामलक्ष्मणौ
- इदम् = इत्थम्
- अभाषत = उक्तवान्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

तदनु जनकराजधानीं रामलक्ष्मणनिरीक्षणकौतुकादनवरतपतितेन विकचकुवलयनिचयोपचीयमानमेचकमरीचिमलिम्लुचेन पौरनारीलोचनरोचिषा कवचितनरपतिपथां विश्वामित्रः प्रविश्य दशरथतनयाविदमभाषत।

- तात्पर्य्यम् – यदा विश्वामित्रः रामलक्ष्मणाभ्यां सह मिथिलां प्रविष्टः, तदा अतिसुन्दरयोः राम-लक्ष्मणयोः दर्शनकौतूहलेन सर्वाः पौरनार्यः सम्मिलिताः । मिथिलायाः राजमार्गः तासां नारीणां विकसित-कुवलय-समूह-सदृश्या नयनकान्त्या आच्छादितः आसीत् । तादृशीं मिथिलां प्रविश्य विश्वामित्रः रामलक्ष्मणौ इत्थम् उक्तवान् ।

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskrtam · Value Education · Technology

तदनु जनकराजधानीं रामलक्ष्मणनिरीक्षणकौतुकादनवरतपतितेन विकचकुवलयनिचयोपचीयमानमेचकमरीचिमलिम्लुचेन पौरनारीलोचनरोचिषा कवचितनरपतिपथां विश्वामित्रः प्रविश्य दशरथतनयाविदमभाषत।

- पौरनारीलोचनरोचिषा – पौराः नार्यः, पौरनारीणां लोचनानि, पौरनारीलोचनानां रोचिः, तेन । सकारान्तः, नपुं, ३.१
- कवचितनरपतिपथाम् – नरपतेः पन्थाः, "ऋक्पूरब्धूःपथामानक्षे" इति अ-प्रत्ययः समासान्तः । कवचितः नरपतिपथः यस्यां सा, ताम्

vyoma || वाचं धेनुमुपासीत || Samskrtam - Value Education - Technology

# अस्यां खलु नगर्यामारब्धयज्ञस्य राज्ञो जनकस्य भागधेयात्सीतानामधेयभाजनमजीजनत्कन्यारत्नं रत्नगर्भा भगवती।

- अस्याम्, खलु, नगर्याम्, आरब्ध-यज्ञस्य, राज्ञः, जनकस्य, भागधेयात्, सीता-नामधेय-भाजनम्, अजीजनत्, कन्या-रत्नं, रत्न-गर्भा, भगवती।
- अस्याम् खलु = एतस्याम् एव
- नगर्याम् = पुर्याम्
- आरब्ध-यज्ञस्य = उपक्रान्त-क्रतोः
- राज्ञः जनकस्य = जनकमहाराजस्य

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education ...

# अस्यां खलु नगर्यामारब्धयज्ञस्य राज्ञो जनकस्य भागधेयात्सीतानामधेयभाजनमजीजनत्कन्यारत्नं रत्नगर्भा भगवती।

- भागधेयात् = भाग्यवशात्
- भगवती = पूज्या
- रत्नगर्भा = भूदेवी
- सीतानामधेयभाजनम् = सीतानाम्नीम्
- कन्यारत्नम् = श्रेष्ठां कन्यकाम्
- अजीजनत् = जनयामास

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# अस्यां खलु नगर्यामारब्धयज्ञस्य राज्ञो जनकस्य भागधेयात्सीतानामधेयभाजनमजीजनत्कन्यारत्नं रत्नगर्भा भगवती।

- तात्पर्य्यम् – एतस्यामेव मिथिलानगर्यां यदा राजा जनकः क्रतुमेकम् आरब्धवान्, तदा तस्य भाग्यवशात् पूज्या भूदेवी सीतानाम्नीं श्रेष्ठां कन्यकाम् उत्पादयामास ।
- आरब्धयज्ञस्य – आरब्धः यज्ञः येन सः, तस्य
- भागधेयात् – “दैवं दिष्टं भागधेयम्” (अमरः)

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education ...

# अस्यां खलु नगर्यामारब्धयज्ञस्य राज्ञो जनकस्य भागधेयात्सीतानामधेयभाजनमजीजनत्कन्यारत्नं रत्नगर्भा भगवती।

- अजीजनत् = "जनी प्रादुर्भावे" + णिच् + लुङ् प्रथम.१
- कन्यारत्नम् – "जातौ जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यते"
- रत्नगर्भा – रत्नानि गर्भे यस्याः सा । "भूतधात्री रत्नगर्भा जगती सागराम्बरा" (अमरः)

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# अस्याः पुनः किमपरं माहात्म्यम्।

- अस्याः, पुनः, किम्, अपरम्, माहात्म्यम्
- अस्याः = मिथिलायाः
- अपरम् = इतोप्यधिकम्
- माहात्म्यम् = महिमवर्णनम्
- पुनः किम् = भूयः किं वक्तव्यम्? (वक्तव्यं नास्ति)
- तात्पर्य्यम् – अस्याः मिथिलायाः महिमविषये अन्यत् किमपि वक्तव्यं नास्ति

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

# सङ्क्षेपः

- असौ वसिष्ठनिर्देशात्
- इति जनकपुरोधःश्लाघितो
- मिथिलाप्रवेशः
- मिथिलामाहात्म्यम्






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in